कर्तव्यताकांक्षोपपत्तिरिति वाच्यम्, आश्रयस्य करणतानिर्वाहकत्वेन करण कोटावन्तर्भावात् तदनुग्राहकेतिकर्तव्यताया भेदेनैव अपेक्षितत्वात् । आश्रयाकांक्षा करणाकाङ्क्षातो भिन्नेति मते आश्रयस्य करणकोटावनन्तर्भावेप्याश्रयस्य दृष्टविधया करणतासम्पादकस्यादृष्टार्थाया भावनाया अदृष्टोपायापेक्षत्वात् न तदुपकारकत्वं सम्भवतीति युक्त तद्व्यतिरिक्तेतिकर्तव्यतापेक्षणम् । यद्यप्याश्रयान्तरकरणे फलानुत्पत्तेराश्रयनियमादृष्टस्याप्युत्पत्तेरावश्यकत्वात् तद्द्वारा तन्नियमस्येतिकर्तव्यतात्वमाशङ्क्येत, तथापि दध्यादिगुणसन्निपत्योपकारस्य क्रयसम्पादनादेरपेक्षितत्वात् आश्रयत्वगान विधानत्वस्य च संस्थाधिकरणे निषेत्स्यमानत्वात् युक्त आश्रयतो धर्मातिदेशः । नचैवमपि सादृश्याभावात्कथं कल्पितवचनातिदेश? सादृश्यकार्यस्य प्रकृतिविशेषोपस्थापनस्य प्रकरणेनैवेह सिद्धे तदनपेक्षणात् । यद्यपि च ये प्रकृतावाश्रयस्वरूपसिद्ध्यर्था देवतादय, तेषामिह गुणस्वरूपसिद्ध्यर्थत्वासम्भवात् नात एव प्राप्तीति, तथापि तदन्येषामतिदेश, ते त्वाश्रयसिद्ध्यर्थं क्रियमाणा अपि न गुणं उपकुर्वन्ति । ननु येपि प्रकृतौ प्रधानद्वारा तदपूर्वसाधनीभूतद्रव्यसंस्कारार्थाबज्वलनादय तेपि कथं प्राकृतप्रणाडीरहिते गुणे प्राप्नुयु? सत्यमेवं न प्राप्नुवन्ति, तथापि दध्यादौ क्रत्वर्थत्वस्यापि सत्त्वात् गोदोहनादेश्च नित्यचमसस्थानत्वात् स्थानापत्तिरूपातिदेशेन प्रणयनानङ्गभूतेपि प्रणयनोपकारके गोदोहने धर्माः प्राप्नुवन्त्येव । परन्तु ते प्रणयनादिकार्यप्रयुक्ता एव, नतु गुणापूर्वप्रयुक्ताः । गुणस्यापि त्वपेक्षिताः केचित्सम्पादनप्रक्षालनादयः प्रसङ्गादुपकुर्वन्ति, अन्ये त्वारादुपकारका जपोपस्थानादयो गुणभावनायामतिदेशेन प्राप्नुवन्ति । तत्रापि तज्जन्या उपकारा एवातिदिश्यन्ते, नतु तज्जनकीभूताः पदार्था अपि, गुणस्य स्वर्गादिप्रयुक्ताश्रयोपजीवित्वेन तत्सम्बन्धस्यपानावगमात् प्रसङ्गेन तदर्थानुष्ठिताङ्गजन्योपकारलाभोपपत्तेः

स्वातन्त्र्येण जनकानपेक्षत्वस्य द्वादशे वक्ष्यमाणत्वात् । अत एव गोदोहनादे दर्शपूर्णमासापूर्वप्रयुक्तप्रणयनाद्युपजीवित्वात सौर्यादावननतिदेश इति वक्ष्यते । आश्रयानुष्ठापकत्व त्वाश्रयस्यानङ्गत्वात् फलस्यानुष्ठापका न्तरयुक्तत्वाच्च स्पष्टमेव । तस्मात् सिद्ध गुणादेव फलमिति । प्रयोजन न्यायपक्षे दध्यपचारे प्रतिनिध्युपादानमारम्भोत्तरम् , तत प्राक् दध्य भावे अनारम्भ एव, द्वितीयपक्षे यद्यपि " हवा एतद्यज्ञश्छिद्यते यदन्यस्य तन्त्रे प्रनतेे अन्यस्य तन्त्र प्रनायत' इति वचनादेकप्रयोगमध्येऽपरस्य कामस्य प्रयोग सामान्यतो निषिद्ध तथापि द्वयोरनयोरग्निहोत्रकर्मा न्तरयोरेककालत्वात्तन्त्रप्रयोगापत्ते सङ्कल्पादौ तत्तत्फलार्थ कर्मद्वयमपि तन्त्रेण करिष्य इत्युल्लेख प्रयोजनम् । गोदोहनोदाहरणे तु प्रयोगात् बहि प्रणयनानुष्ठानम् ।

यत्तु वार्तिके प्रणयतीत्यस्य कर्मसाकाङ्क्षत्वात् "अप प्रणयती' ति वाक्यान्तरश्रुतद्वितीयान्तापदानुषङ्गावगतेरपा चोपयोगसत्त्वेन तत्संस्कारा- र्थस्यैव प्रणयनस्य फलार्थत्वावगमात् परप्रयुक्तसंस्कारोपजीवित्वेन पक्ष द्वयेपि क्रतुप्रयोगमध्यकरणोपपत्ते नानुष्ठाने भेदो लभ्यत इत्युक्तम् , तद नुपस्कस्याप्यप पदस्य संस्कार्यपरत्वे उद्देश्यानेकत्वकृतवाक्यभेदापत्ते सक्तु न्यायेन विनियोगभङ्गावसायाल्लौकिकाप्साधनकप्रणयनस्य पश्वर्थत्वावगते रतिशयार्थम् ।

सिद्धान्ते तु तत्तत्फलार्थेन गुणेन सहाश्रय स्वफलार्थ करिष्य इत्यु ल्लेख प्रयोजन द्रष्टव्यम् ।

सूत्र तु— यागादिवाक्यस्य दध्यादिवाक्यस्य च भावार्थाधिकरण प्रदर्श्यप्रवृत्तिभ्या तुल्यत्वाभावात् तस्याश्रयस्य फलसम्बन्धिनि गुण एव दध्यादिवाक्यस्थफल प्रतीयेतेति योज्यम् ।

इतीन्द्रियकामाधिकरणम् ॥१०॥

———(*)———






## अथ रैवत्यधिकरणम् ॥

धर्मेषु धर्मयुक्तं स्यात् ॥२—२—२६॥

ज्योतिष्टोमप्रकृतिको ऽग्निष्टुद्याग समाम्नात " त्रिवृदग्निष्टुदग्नि-ष्टोम तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेते " ति । अत्र च प्रथमान्तत्रयस्य यजेतेत्यनेनान्वयात् कर्तव्यपदाध्याहारेण भिन्नवाक्यत्व तावदावश्यकम् । तत्र च त्रिवृत्पदन्तावदातिदेशिक चतुस्तोमत्वव्यावृत्तिफलकतया सर्वस्तोत्रेषु त्रिवृत्स्तोमविधायकम् । अग्निष्टु त्पदमाग्नेयीषु स्तुवत इति वचनादग्निदेवत्यमन्त्रसाध्यस्तोत्रकत्वात् तत्प्र ख्यन्यायेन नामधेयम् । अग्निष्टोमपद चाग्निष्टोमसस्थ कत्वप्रतिप्रसवार्थम् । यद्यपि हि ज्योतिष्टोमात् नियतमेवाग्निष्टोमसस्था नित्यत्वात् प्राप्यते, तथा प्येतत्पूर्वभाविराजस्योक्थ्यसस्थाकस्य निकायित्वेन एतद्यागप्रकृतित्वाव गमात् तत उक्थ्यसस्थाया एव प्राप्यमाणत्वेन प्रतिप्रसवत्वोपपत्ति । राजन्यनिमित्तकाग्निष्टोमसंस्थानिकारभूतान्यग्निष्टोमताव्यावृत्तिफलकोक्थ्य सर्व साधारण्येनाग्निष्टोमसस्थाविधिरिति द्रष्टव्यम् । गुणद्वयविशिष्टापूर्वकर्मविधा नाच्च न वाक्यभेद । तस्येति वाक्येन तु राजसूय न्यायेन वायव्यगतैक विंशस्तोमविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालत्वादिविशिष्टो यागप्रयोग फलो द्देशेन विधीयते । तत्र वायव्यमन्त्राणामतिदेशप्राप्तमन्त्रबाधेनाग्नेयमन्त्र बाधेन वा निवेश । यद्यपि चात्राग्निष्टोमसामपदसमभिव्याहाराद्धारता सम्बन्धेन साम्नि मन्त्राणा विशेषणत्व प्रतीयते तथापि अनन्यलभ्यार्थकल्प नापत्ते न साम्नाङ्गत्वेन मन्त्रविधि, किं तु पाष्ठिकान्वयलभ्य साम्सम्बन्ध मनूद्य विशेषणप्रधानमग्निष्टोमशब्दमगीकृत्य स्तोत्राङ्गतयैव मन्त्रविधि । एवमेकविंशस्तोमकृतप्रतिप्रसवोऽपि तत्रैव । प्रकृतितो हि अग्निष्टोमस्तोत्र एकविंशस्तोमकत्वे प्राप्ते ऽग्निष्टोमस्तोत्रमात्रस्य त्रिवृत्तया बाधितो निवर्तमाने अथ

प्रतिप्रसवः । अतश्चोभयविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालादिविशिष्टयाग प्रयोगविधिरेवायम् । यद्यपि चाग्निष्टोमस्तोत्रभावनोत्तरकालत्वमतिदेशतः सम्भवत्प्राप्तिकम्, तथापि एकवाक्यत्वसिद्ध्यर्थं विशिष्टविधिसन्दंशन्यायेन वाऽतिदेशप्राप्तेः पूर्वप्रवृत्त्यङ्गीकारेण वा तस्य विधिर्नानुपपन्नः । यद्यपि चाग्निष्टोमस्तोत्रस्य प्रकृतौ सर्वान्त्यत्वात् यागप्रयोगपूर्वकालत्वं सम्भवति, तथापि सर्वाङ्गानुष्ठानसौकर्यार्थमादितोऽवधारणादग्निष्टोमस्तोत्रस्यापि तत्सिद्धेः प्रतिपत्तिपूर्वकालत्वाभिप्रायेण तदिति मूलानुसारिणः । वस्तुतस्त्वेतादृशविषये मुखं व्यादाय स्वपितीति वत् समकालत्वमेव प्रयोगमध्यवृत्तित्वरूपं लक्षणया क्त्वाप्रत्ययार्थो विधीयते वाक्यभेदपरिहारार्थम् । अथवा अस्तु समानकर्तृकत्वमात्रमत्र तदर्थं, यद्यपि च ऋत्विक्कर्तृकस्तोत्रसमानकर्तृकत्वं यजमानकर्तृके यागे न मुख्यम्, तथापि प्रयोजककर्तृत्वाभिप्रायेण तदुपपत्तेः न विरोधः; तत्प्रकरणे च "वारवन्तीयमग्निष्टोम कार्यं" मिति श्रुतेन वाक्येन प्राकृतयज्ञायज्ञीयबाधेनाग्निष्टोमस्तोत्रे वारवन्तीय विहितम्, तदनन्तरञ्चैतस्यैव "रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते" ति श्रुतम् । तत्र च पूर्ववदेव द्वेधा सन्देहः । पाद्यायस्तकृती स्पष्टे । भाष्यादिकी त्वनन्तरा ।

तत्र प्रकृतस्याग्निष्टोमादेरुपदेशश्रुतेः प्रमाणाभावाच्च न तत्कर्मान्तरम्, सिद्धान्ते वक्ष्यमाणरीत्यैव चाभ्यासाभावेनापि गुणकर्मसम्बन्धः, अतो वाक्यप्रमाणकदर्शनेन रेवतीमात्रविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालादिविशिष्टो यागप्रयोगः फलार्थं विधीयते । न तत्र दधिन्यायेन गुणस्योपादानत्वप्रयोज्यत्वम्, अपि तु कालादिरूपस्य गुणस्यानुबन्धत्वेन प्रयोगविशेषणत्वमेव, अतोऽत्र गुणविशिष्टस्य तस्यैव कर्मणः फलोद्देशेन विधानमित्येकः पक्षः । द्वितीयस्तु — नात्र गुणसम्बन्धः, प्रयोगस्य

वाक्यव्यवायेनैव प्राप्तत्वात्, फलान्तरश्रवणेऽपि च विविदिषावाक्यव द्विनियोगमात्रकरणेन प्रयोगान्तरस्याविधानोपपत्तेः, नच विनिगमना विरहः, प्राथम्येन वाक्यव्यवाय एव प्रयोगविधेर्नियन्तुं शक्यत्वात् । एवं सत्यपि यदि विशेषणीभूतस्य रेवतीमात्रविशिष्टाग्निष्टोमस्तोत्रत्व नोत्तरकालतादेरप्राप्तिः स्यात् ततोऽवेष्टेः ' यदि ब्राह्मणो यजेत " इत्यादौ विधेयकर्तृकालादिरूपाकगुणवशादिव प्रयोगान्तरमपि विधीयेत, न त्वेव दस्ति, तस्यापि वाक्यव्यवायेनैव प्राप्तत्वात्, नह्यत्र तत पूर्वप्रवृत्ति शक्यते वक्तुम्, प्रापकस्यापि प्रत्यक्षत्वात्, नच प्राप्तस्यापि विशिष्टविधि सन्दष्टतयैव विधेयतामापाद्य प्रयोगभेदकत्वम् अयोग्यतापत्तेः - सति हि प्रयोगविधौ विशिष्टविधिसन्दष्टता, तस्याश्च सत्त्वे विधेयत्वात् प्रयोगविधिरिति । अतः परिशेषाद्रेवतीमात्रं प्राप्ताग्निष्टोमस्तोत्रोद्देश्यत्वेना देन विधेयम्- फलोद्देशेन यागविनियोगश्चेति वाक्यभेदतादवस्थ्यात् द्वि यायेऽत्र लाघवात् गुणफलसम्बन्धविधिरेव । तत्रापि रेवतीमात्र स्याप्राप्तत्वात् यद्यपि विधिः तन्मात्र एव सङ्क्रमते तथापि नात्र तासां फलसम्बन्धः, तथात्वे तासां निधिलिङ्गसङ्कुचत्वादेतच्छब्देन तृतीया न्तेन फलसाधनतयोपादानानुपपत्तेः, किन्तु प्राप्तस्यापि रेवतीविशिष्टस्य वारवन्तीयस्यैव, यद्यपि चात्राप्यवलम्बशर्यकल्पनापत्ते रेवतीनामग्नि ष्टोमस्तोत्र एवाङ्गत्वम्, तथापि पार्ष्टिरान्यलभ्याधारतासम्बन्धेनैव तासां रेवतीनां वैशिष्ट्यं नानुपपन्नम् । अत एवैतच्छब्दोपपत्तावपि नाग्नि ष्टोमस्तोत्रस्यैव रेवत्यङ्गस्य फलसम्बन्धः, अग्निष्टोमसामपदस्य विशे षणप्रधानत्वे लक्षणापत्तेः । नच रेवतीवारवन्तीययोः पृथक्पदोपात्त कारकत्वेन कथं वैशिष्ट्योपपत्तिः, फलकर्मकभावनाया विधेयत्वेन तस्यामुभयोः प्रथमतः सम्बन्धाङ्गीकरणेन सोमादिवत् पश्चात् परस्पर वैशिष्ट्योपपत्तेः, कृत्वाशब्दश्रवणेन रेवतीषु कृत्वा वारवन्तीयं तेन फल माप्नुयादित्यर्थावगमाद्वैशिष्ट्योपपत्तेश्च । अतो रेवतीविशिष्टस्य वारवन्ती

यस्य फलसम्बन्धः, तस्य च स्वरसमाहारात्मकस्य सौभरादिवत् सिद्धरूपत्वेनाश्रयापेक्षाया प्राकृतस्य यागस्यैवाश्रयत्वम्, नहि गायतिधातुवाच्यत्वात् साम्नः क्रियात्मकत्वाशङ्का, गडिवदनैकदेश इत्यादौ गण्डादीनां धातुवाच्यत्वेपि सिद्धरूपत्ववत्। सामशब्दस्य "सामाथो यः कश्च रोपणः स्वरः" इति श्रुतेः षड्जादिस्वरसमाहारवाचित्वात्, स्वरशब्दस्य च "मारुतस्तूरसि चरन्मन्द्रञ्जनयति स्वरम्" मित्यादि सङ्गीतशास्त्रपर्यालोचनया सिद्धरूपवायवीयसंयोगविभागजनितध्वन्यात्मकशब्दविशेषवाचित्वावगमेन वारवन्तीयादेः सिद्धरूपत्वप्रतीतेः। अतश्च तस्याश्रयापेक्षाया युक्तमेव यागस्याश्रयत्वम्। शक्यते हि सप्ता ऋगक्षराभिव्यक्तिद्वारा स्तोत्रमिव याग साधयितुम्। अतश्च सौभरसाम्नः स्तोत्राश्रितत्वमिव वारवन्तीयस्यापि यागाश्रितत्व तदीययाज्यादिमात्राधारतया उच्चैष्ट्वादिवन्न विरुध्यते। रेवतीनामपि चात एव याज्यादिकार्ये निवेशोप्युन्नेयः। काम्येन च वारवन्तीयादिना सामान्यविधिप्राप्तस्य वातिदेशप्राप्तस्य वैकृतस्यादेर्बाधोऽपि सुवच एव। यदि चाग्निष्टोमसामेत्यनुवादानुपपत्तिराशङ्क्येत, ततोऽग्निष्टोमस्तोत्रद्वारैव यागस्य जन्यत्वापरपर्यायमाश्रयत्वम्। इष्यत एव हि श्रीह्यादौ परम्परासम्बन्धेन जन्यत्वम्, आश्रयत्वमपि च सौभरादौ स्तोत्रादेः। अस्तु वा यागस्याग्निष्टोमस्तोत्रजन्यत्वात् परम्परासम्बन्धेन जन्यत्वापरपर्यायाश्रयत्वायोगेप्यानर्थक्यतदङ्गन्यायेनाग्निष्टोमस्तोत्रेऽवतारः। इष्यते चोरध्यादिस्तोत्रनिरूपितसमाप्तिप्रतियोगित्वरूपस्याश्रयत्वस्य साक्षात् प्रकृते यागे ऽसम्भवेन प्रयोगे चावतार "पशुनाग उदय्यं गृह्णीया" दित्यादौ। नच स्तोत्रान्तराणामपि प्रकृतयागाङ्गत्वादग्निष्टोमस्तोत्र एवावतारे प्रमाणाभावः, अग्निष्टोमस्तोत्रस्य चासत्त्ववारणे विहितत्वेन वारवन्तीयवाक्येऽनुवादेन चाग्नि

वायव्यवाक्येनैव प्राप्तत्वात् , फलान्तरश्रवणेऽपि च विविदिषावाक्यव दिविनियोगमात्रकरणेन प्रयोगान्तरस्याविधानोपपत्ते, नच विनिगमना विरह, प्राथम्येन वायव्यवाक्य एव प्रयोगविधे नियन्तु शक्यत्वात् । एव सत्यपि यदि विशेषणीभूतस्य रेवतीमात्रविशिष्टामिष्टोमस्तोत्रगव नोत्तरकालत्वादेरप्राप्ति स्यात् ततोऽवेष्टे " यदि ब्राह्मणो यजेत " त्यादौ विधेयकर्तृकालादिरूपानेकगुणवशादिव प्रयोगान्तरमपि विधीयेत, न त्वेत दस्ति, तस्यापि वायव्यवाक्येनैव प्राप्तत्वात् , नह्यत्र तत पूर्वप्रभृति शक्यते वक्तुम् , प्रापकस्यापि प्रत्यक्षत्वात् , नच प्रत्यस्यापि विशिष्टविधि सन्दष्टन्यायेन विधेयतामापाद्य प्रयोगभेदकत्वम् अन्योन्याश्रयापत्ते – सति हि प्रयोगविधौ विशिष्टविधिसन्दष्टता, तस्या च सत्या विधेयत्वात् प्रयोगविधिरिति । अत परिशेषाद्रेवतीमात्र प्राप्ताग्निष्टोमस्तोत्रत्वस्यानुवा देन विधेयम्– फलोद्देशेन यागविनियोगश्चेति वाक्यभेदतादवस्थ्यात् दधिन्यायेनात्र लाघवात् गुणफलसम्बन्धविधिरेव । तत्रापि रेवतीमात्र स्याप्राप्तत्वात् यद्यपि विधि तन्मात्र एव सङ्गच्छते तथापि नात्र तासा फलसम्बन्ध, तथात्वे तासा त्रिधिलिङ्गसङ्कुचत्वादेतच्छब्देन तृतीया न्तेन फलसाधनतयोपादानानुपपत्ते, किन्तु प्राप्तस्यापि रेवतीविशिष्टस्य वारवन्तीयस्यैव , यद्यपि चात्राप्यवलृप्तकार्यकल्पनापत्त रेवतीनामामि ष्टोमस्तोत्र एवाङ्गत्वम्, तथापि प्राप्तिमात्रबलेनाधारतासम्बन्धेनैव तासि रेवतीना वैशिष्ट्य नानुपपन्नम् । अत एवैतच्छब्दोपपत्तावपि नाग्नि ष्टोमस्तोत्रस्यैव रेवत्यङ्गस्य फलसम्बन्ध, अग्निष्टोमसामपदस्य विशे षणप्रधानत्वे लक्षणापत्ते । नच रेवतीवारवन्तीययो पृथक्पदोपात्त कारकत्वेन कथ वैशिष्ट्योपपत्ति ? फलकर्मकभावनाया विधेयत्वेन तस्यामुभयो प्रथमत सम्बन्धाङ्गीकरणेन सोमादिवत् पश्चात् परस्पर वैशिष्ट्योपपत्ते, कृत्वाशब्दश्रवणेन रेवतीषु कृत्वा वारवन्तीय तेन फल भावयेदित्यर्थावगमाद्वैशिष्ट्योपपत्तेश्च । अतो रेवतीविशिष्टस्य वारव न्ती

यस्य फलसम्बन्धः, तस्य च स्वरसमाहारात्मकस्य सौभरादिवत् सिद्ध रूपत्वेनाश्रयापेक्षायां प्राकृतस्य यागस्यैवाश्रयत्वम्, नहि गायतिधातु वाच्यत्वात् साम्न क्रियात्मकत्वाशङ्का, गडिवदनैकदेश इत्यादौ गण्डा दीनां धातुवाच्यत्वेपि सिद्धरूपत्ववत् । सामशब्दस्य "सामार्थो यः कश्च रोषण. स्वर" इति श्रुते षड्जादिस्वरसमाहारवाचित्वात् - स्वर शब्दस्य च "मारुतस्तूरसि चरन्मन्द्रञ्जनयति स्वर" मित्यादि सङ्गीत शास्त्रपर्यालोचनया सिद्धरूपवायवीयसयोगविभागजनितध्वन्यात्मकशब्दविशे षवाचित्वावगमेन वारवन्तीयादे सिद्धरूपत्वप्रतीते । अतश्च तस्या श्रयापेक्षाया युक्तमेव यागस्याश्रयत्वम् । शक्यते हि स साम ऋगक्षरा भिव्यक्तिद्वारा स्तोत्रमिव यागः साधयितुम् । अतश्च सौभरसाम्नस्तोत्रा श्रितत्वमिव वारवन्तीयस्यापि यागाश्रितत्व तदीयधर्मादिमात्राधारतया उच्चैष्ट्वादिवन्न विरुध्यते । रेवतीनामपि चात्र एव याज्यादिकार्ये निवेशोऽप्युन्नेयः । काम्येन च वारवन्तीयादिना सामान्यविधिप्राप्तस्य वातिदेशप्राप्तस्य वैरूप्यत्यादेर्बाधोऽपि युक्त एव । यदिचाग्निष्टोमसामेत्यनु वादानुपपत्तिराशङ्क्येत, ततोऽग्निष्टोमस्तोत्रद्वारैव यागस्य जन्यत्वापरपर्याय साध्यत्वम् । इत्थत एव हि भीमादौ परम्परासम्बन्धेन जन्यत्वम्, साध्यत्वमपि च सौभरादौ स्तोत्रादे । अस्तु वा यागस्याग्निष्टोमस्तोत्र जन्यत्वात् परम्परासम्बन्धेन जन्यत्वापरपर्यायसाध्यत्वायोगेप्यानर्थक्यतद्‌ङ्ग न्यायेनाग्निष्टोमस्तोत्रैवानार: । इष्यते चौपम्यादिस्तोत्रनिरूपितसमाप्तिप्राप्ति योगित्वस्याप्याश्रयत्वस्य साक्षात् प्रकृते यागे ऽसम्भवेन प्रयोगे चा वतार· "वसुधाग उदग्रं गृह्णाता" दित्यादौ । न च स्तोत्रान्तराणा मपि प्रकृतयागाद्यन्तादग्निष्टोमस्तोत्र एवावतारे प्रमाणाभाव·, अग्नि ष्टोमस्तोत्रस्य यागस्यसमाप्ते निर्दिष्टत्वेन वारवन्तीयस्यैवानुवादेन चाग्नि

देशिकस्तोत्रान्तरापेक्षया निशिष्टोपस्थितत्वात् शास्त्रस्याबाधपक्षपातित्वे न काम्यस्यापि वारवन्तीयस्य स्तोत्रान्तरे निवेश । आतिदेशिकसाम बाधापत्ते वारवन्तीयाङ्गकाग्निष्टोमस्तोत्रमात्रनिवेशावगमाच्च ।

एतेन यत् सिद्धान्तवार्त्तिके 'पुरुषार्थवारन्तीयस्य क्रत्वर्थेन सह भेदाद्वाग्निष्टोमस्तोत्रवृत्तित्वं भवेत् क्रत्वर्थस्य तद्वृत्तिदर्शनेनात्राप्यनुमानाद्वा, एतस्य तदंशानापन्नत्वाद्वा ? नाद्य, एकस्य देवदत्तस्य युद्धभोजनादिकार्यभेदेन एकस्थाननियमवदेकस्थानत्वे प्रमाणाभावात् । न द्वितीय, सामान्यतो दृष्टस्याप्रयोजकत्वात् ; वारवन्तीयत्वहेतोराधाने ऽनैकान्तिकत्वाच्च । अग्निष्टोमस्तोत्रवृत्तित्वस्य च साधनतापरपर्यायस्य सामप्रयोजनत्वेन सामाङ्गतया कार्यपदस्याप्यनतिदेशाच्च तृतीयोऽपि । अतो नाग्निष्टोमस्तोत्रमात्रवृत्तिता सम्भवती' त्युक्तम्, तदपि परास्तम्, अबाधेनोपपत्तौ बाधायोगादिति न्यायेनैव तदुपपत्ते । यत्त्वस्मिन् पक्षे रेवतीभिर्बाधस्याबाध, स स्तोत्रान्तरेष्वातिदेशिकसामान्तराबाधातुल्य इत्यकिञ्चित्कर । अतो युक्त एवानर्थक्यतदङ्गन्यायेनाग्निष्टोमस्तोत्रमात्रेऽवतार । अस्तुवाऽग्निष्टोमस्तोत्रस्यैव विशिष्योपस्थित्यादिनाश्रयत्वम्, तस्य च धर्मिग्राहकप्रमाणेनाग्निष्टुद्यागसम्बन्धिन एव लाभाभजि पञ्चम्नैतच्छब्द क्त्वाप्रत्ययश्च सर्वमनुवाद । अथवा वारवन्तीयमग्निष्टोमसामकार्यमिति प्राकरणिकवाक्येनैव लाघवाद्भयसम्बन्धो विधीयते, न त्वङ्गाङ्गिसम्बन्ध, गौरवात्, दध्यादिवाक्येषु त्वन्यलभ्यत्वादाश्रयस्यागत्या गौरवाङ्गीकरणम् । तदेव वारवन्तीयस्यैव फलसम्बन्ध इति पूर्वोक्त पक्ष उपपादित । अथवास्तु रेवतीनामप्रसक्तत्वात् तस्यैव

विधिसकरणानवगते तासामेव फलसम्बन्धः । सप्तमीचेन यद्यपि स्तोत्र निरूपित सामनिरूपितमेव च ऽधिकरणत्वं वदति, तथाप्येतच्छब्देन तृतीयान्तेन रेवतीविशिष्टवारवन्तीयस्यैव पूर्वोपस्थितस्य परामर्शात् तत्र च विशेष्यस्य प्राप्तत्वेनाविधेयत्वादप्राप्तरूपविशेषणस्यैव दाक्षायण यज्ञपदे आवृत्तेरिव फलसम्बन्धोपपत्तिः । अत एवैतच्छब्दस्यापि लिङ्ग साध्यत्वाञ्च रेवतीपरामर्शकत्वमित्यप्यपास्तम्, विशिष्टपरामर्शकत्वे ऽप्य विरोधात् । नन्वेतस्मिन् पक्षे रेवतीनामग्निष्टोमस्तोत्रमात्रवृत्तित्वस्य पूर्वोक्तविधयाप्यलाभात् कथं गुणफलसम्बन्धोपपत्तिः, प्रकरणेन तदलाभेऽपि वाक्येनाश्रयलाभोपपत्तेः । तथाहि— दध्यादावपि सम्भवत्येव वाक्येनाश्रयविधिः । न च वाक्यभेदः, होमविशिष्टदध्नः फलोद्देशेन विधानोपपत्तेः । नचैव होमस्य दध्यङ्गत्वापत्तिः, फलसम्बन्धोनत्वेनाङ्गतासम्बन्धेन वैशिष्ट्यानङ्गीकारात्, अपितु अपेक्षावशात् आश्रयतासम्बन्धेनैव । अतश्च यथैव "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यादौ न दर्शपूर्ण मासयोः सोमाङ्गत्वमुत्तरकालाङ्गत्वं वा, अपि तु निरूपकतासम्बन्धेनै वोत्तरकालताया वैशिष्ट्यम्, तथात्राप्याश्रयतासम्बन्धेन तदङ्गीकारे न कश्चिद्विरोधः । स तु तत्र नाश्रित, अन्यत एव लाभोपपत्तेः । प्रकृते तु प्रकरणेनाश्रयप्राप्तेरसम्भवात् वाक्येनैवाग्निष्टोमाङ्गत्वमग्निष्टोमस्तोत्रसाधनी भूतरेवतीविधानाद्वाक्यभेद विनैवाश्रयलाभोपपत्तिः । अथवा अग्निष्टोम स्तोत्रस्यैवाश्रयतासम्बन्धेन वैशिष्ट्यम्, तस्य तु प्रकरणात् प्रणयनादे रिवाग्निष्टोमसम्बन्धिन एवोपस्थितेरप्यन्तस्तैतच्छब्दो यत्निश्च वारवन्तीय पदवदनुवादः । किंचास्मिन् पक्षे यथैव सिद्धान्ते रेवत्यादिविशिष्टस्तोत्र भावनाविशिष्टयागविधानं कृत्वाशब्दगतिरिति न दुष्यति, तथैव मम प्याश्रयभावनाविशिष्टगुणभावनाविधानमिति सर्वथाश्रयप्राप्तिसम्भवात् फल सम्बन्धविधिरेव युक्तः ।

इति प्राप्तेऽभिधीयते— नात्र गुणात् फलम्, आश्रयालाभात्। तथाहि— वाक्यान्तरीयस्य फलसम्बन्धित्वपक्षे तावन्नाश्रयलाभः, स हि प्रकरणादभिप्रेतो वाक्याद्वा? आद्येऽपि किं यागस्यैवाश्रयत्वम्, अग्निष्टोमस्तोत्रस्य वा? तत्रापि किं यागस्य साक्षात् अग्निष्टोमस्तोत्रद्वारा वा? नाद्य, अग्निष्टोमसामेत्यस्यानुवादानुपपत्तेः। न द्वितीय, स्तोत्रस्यादृष्टविधया यागाङ्गत्वात् तद्द्वारा यागस्याश्रयत्वानुपपत्तेः। दृष्टविधया हि कृतिसाध्यधात्वर्थसम्बन्धित्वं गुणस्यापेक्षितमित्युक्तं पूर्वाधिकरणे। अदृष्टद्वारा हि तदाश्रयणे गुणस्याश्रयं विनापि फलकरणत्वस्यादृष्टद्वारोपपत्तेः कुत आश्रयाकाङ्क्षया। न चेष्टापत्तिः, करणविभक्तेर्वैयर्थ्यापत्तेरुक्तत्वात्। नचैवमपि पूर्वकालत्वादिरूपदृष्टसम्बन्धेनैवाग्निष्टोमस्तोत्रस्य द्वारत्वोपपत्तेः युक्तमेव परम्परया यागस्याश्रयत्वमिति वाच्यम्, एवमपि यागस्यैव तदीयफलाधारत्वेनाश्रयत्वोपपत्तेः। स्तोत्रद्वारकपरम्परायामेव प्रमाणाभावात्। न चाग्निष्टोमसामेत्यनुवादानुपपत्तिः प्रमाणम्, तथात्वे तस्यापि तत्र तात्पर्यकल्पने वाक्यभेदस्यापरिहार्यत्वात्। किञ्चास्तु वा यागस्य साक्षात्सामाश्रयत्वे योग्यत्वम्, तथाप्यग्निष्टोमस्तोत्रस्यैव द्वारत्वनिवेशे किं मानम्? तस्यौपदेशिक्युपस्थितिरिति चेत्? तस्या द्वारत्वाभावसाधकत्वेन विरुद्धत्वात्। न ह्यातिदेशिकस्तोत्रवृत्तिरथन्तरबाधसम्भवे औपदेशिकस्तोत्रवृत्त्यौपदेशिकबाधस्य बाधो रेवतीभिर्युक्तः। तस्मादौपदेशिकत्वस्य द्वारत्वासाधकत्वादग्निष्टोमस्तोत्रस्यैव न द्वारत्वे प्रमाणमस्ति।

एतेन तस्यैव विशिष्योपस्थितेः साक्षादाश्रयत्वं यागे, आनर्थक्येन वा तत्रैवावतरणं प्रयुक्तम्। किंच नायमानर्थक्यतदङ्गन्यायस्य विषयः, सर्वत्र हि श्रुतशब्दजन्यशाब्दबोधे योग्यताज्ञानाभावेऽप्ययोग्यतानिश्चयाभावमात्रेण शाब्दबोधस्यानुभाविकत्वात् तन्निश्चयः प्रतिबन्धकमात्रम्। अतश्च “सप्तदशारत्निर्वाजपेयस्य” इत्यादौ श्रुताया अयोग्यतानिश्चयाभावमात्रेण

शाब्दबोधे जाते पश्चाद्योग्यतालोचनादर्शनात् साक्षादसम्भवेऽप्युक्तपरम्परा-
श्रयणम् । यत्र तु कल्पितशब्देन शाब्दबोधः, तत्र शब्दकल्पनायां योग्य-
ताज्ञानस्यैव कारणत्वम्, अयोग्यतानिश्चयाभावसत्त्वेऽपि योग्यताज्ञानाभावे
शब्दकल्पनानुदयस्यानुभविकत्वात् । अतश्च यागगतयोग्यताज्ञानाभावेन
तद्गताश्रयत्वबोधकशब्दस्यैव प्रकरणेनाकल्पनात् कुतः तदसम्भवे अङ्गे-
ष्ववतारः ।

यत्तु— प्रकरणेनाश्रयलाभाभावेऽपि बारवन्तीयवाक्येनैव तल्लाभोप-
पत्तिरित्युक्तम् । तन्न, तथात्वे ऽग्निष्टुद्यागमात्रवृत्त्यग्निष्टोमस्तोत्रस्यैवाश्रयत्वे
प्रमाणाभावात् । न ह्यग्निष्टोमपदस्याविशेषप्रवृत्तस्यानपेक्षत्वे सति अधि-
काराख्यप्रकरणमात्रेण सङ्कोचो युक्तः, 'तुल्येषु नाधिकारः स्या'दिति
न्यायात् । यद्यपि प्रयुक्तिशक्तिकल्पनागौरवपरिहारार्थं क्रतुप्रयोगवृत्तित्व-
मग्निष्टोमस्तोत्रस्यापेक्ष्यते, तथापि क्रत्वन्तरप्रयोगवृत्तित्वस्यापि सम्भवात्
नाधिकारेण सङ्कोचः । ननु नेदं कुशकाशावलम्बनं युज्यते, गुणविधेः
प्रयुक्तिशक्तिकल्पनापरिहारार्थं प्रणयनादेरिवाग्निष्टोमस्तोत्रस्यापि प्रयोजका-
न्तरापेक्षायां युज्यत एव प्रकृतत्वधिकारस्य सङ्कोचकत्वम्, अत एव
यदपि वार्तिके बारवन्तीयवाक्यस्य गुणफलवाक्यस्य च द्वयोरपि यागोत्पत्ति
वाक्येनैवान्वयात् परस्परान्वयाभावेन न बारवन्तीयवाक्यस्याश्रयसमर्पकत्वं
युज्यत इति समाहितम्, तदप्यपेक्षावशेन व्यूढाद्युत्पत्तिवाक्यवत् बारव-
न्तीयवाक्यस्यापि गुणफलवाक्यैकवाक्यतयाश्रयसमर्पकत्वोपपत्तेरकिञ्चित्करम्,
यदपि च प्राकरणिकाश्रयपक्षे अग्निष्टोमस्तोत्रमात्रवृत्तित्वासम्भवे कारण-
औपदेशिकत्वबाधायोगरूपमुक्तम्, तदपि स्तोत्रान्तरस्याश्रयत्वे कथा सा
च बाधापत्तेरुभयबाधापेक्षया चैकस्यैवौपदेशिकस्यापि बाधौचित्यात् कुश-
काशावलम्बनमिति कथं रेवत्याधारस्य बारवन्तीयस्याश्रयलाभात् फलसम्ब-
न्धानुपपत्तिरिति चेत्, सत्यम्, बारवन्तीयस्य फलसम्बन्धानुपपत्तौ नाश्र-
यलाभः प्रयोजकः, अपि तु प्राप्तत्वेन ततो विध्युद्धरणमेव यागादिष्व

इति प्राप्तेऽभिधीयते– नात्र गुणात् फलम्, आश्रयालाभात् । तथाहि– वारवन्तीयस्य फलसम्बन्धित्वपक्षे तावन्नाश्रयलाभः, स हि प्रकरणादभिप्रेतो वाक्याद्वा? आद्येपि किं यागस्यैवाश्रयत्वम्, अग्निष्टोमस्तोत्रस्य वा? तत्रापि किं यागस्य साक्षात् अग्निष्टोमस्तोत्रद्वारा वा? नाद्य, अग्निष्टोमसामेत्यस्यानुवादानुपपत्तेः । न द्वितीयः, स्तोत्रस्यादृष्टविधया यागाङ्गत्वात् तद्द्वारा यागस्याश्रयत्वानुपपत्तेः । दृष्टविधया हि इति साध्यधात्वर्थसम्बन्धित्वं गुणस्यापेक्षितमित्युक्तं पूर्वाधिकरणे । अदृष्टद्वारा हि तदाश्रयणे गुणस्याश्रयं विनापि फलकरणत्वस्यादृष्टद्वारोपपत्तेः कृतमाश्रयाकाङ्क्षया । न चेष्टापत्तिः, करणविधिवैयर्थ्यापत्तेरुक्तत्वात् । नचैवमपि पूर्वकालत्वादिरूपदृष्टसम्बन्धेनैवाग्निष्टोमस्तोत्रस्य द्वारत्वोपपत्तेः युक्तमेव परम्परया यागस्याश्रयत्वमिति वाच्यम्, एवमपि यागस्यैव तदीयफलाधारत्वेनाश्रयत्वोपपत्तेः । स्तोत्रद्वारकपरम्परायामेव प्रमाणाभावात् । न चाग्निष्टोमसामेत्यनुवादानुपपत्तिः प्रमाणम्, तथात्वे तस्यापि तत्र तात्पर्यकल्पनेन वाक्यभेदस्यापरिहार्यत्वात् । किञ्चास्तु वा यागस्य साक्षात्साम्नाश्रयत्वयोग्यत्वम्, तथाप्यग्निष्टोमस्तोत्रस्यैव द्वारत्वनिवेशे किं मानम्? तस्यौपदेशिकत्वमुपस्थितिरिति चेत्? तस्या द्वारत्वाभावसाधकत्वेन विरुद्धत्वात् । न ह्यातिदेशिकस्तोत्रवृत्तिरूपबाधसम्भवे औपदेशिकस्तोत्रवृत्त्यौपदेशिकबाधव्यवहारो रेवतीभिर्युक्तः । तस्मादौपदेशिकत्वस्य द्वारत्वासाधकत्वादग्निष्टोमस्तोत्रस्यैव न द्वारत्वे प्रमाणमस्ति ।

एतेन तस्यैव विशिष्योपस्थितेः साक्षादाश्रयत्वं यागे, आनर्थक्येन वा तत्रैवावतरणं प्रयुक्तम् । किंच नायमानर्थक्यतदङ्गन्यायस्य विषयः, सर्वत्र हि श्रुतशब्दजन्यशाब्दबोधे योग्यताज्ञानाभावेऽप्ययोग्यतानिश्चयाभावमात्रेण शाब्दबोधस्यानुभाविकत्वात् तन्निश्चय प्रतिबन्धकमात्रम् । अतश्च "सप्तदशारत्निर्वाजपेयस्ये"त्यादौ श्रुतायाः अयोग्यतानिश्चयाभावमात्रेण

यणविध्यविषयस्यात्र भेदकत्वाभावात् । सर्वत्र हि संख्यावत् गुणोऽपि विधेय एव भेदकः, न त्वविधेयः । यावज्जीवमित्यादावपि च निमित्तस्य स्वरूपेण विधेयस्यापि नैमित्तिकसम्बन्धित्वेनाप्राप्ततया विधेयत्वात् विनियोगभेदकत्वाविघातः । अतएव "यदि ब्राह्मणो यजेते" त्यादौ ब्राह्मणादिकर्तृकत्वस्याप्राप्तत्वाद्युक्ता भेदकता । प्रकृते तु मत्वप्रत्ययोपात्तयाग्निष्टोमस्तोत्रोत्तरकालतादेस्स्वरूपेण कर्मसम्बन्धित्वेन चातिदेशादेव प्राप्तत्वात् नैवास्ति भेदकत्वम्, अपि तु रैवतीरूपस्य गुणस्यैव । तस्य चोत्तरयागान्वयित्वात् कर्मभेदकत्वमेव न प्रयोगभेदकत्वम् । नचैवं रैवतीरूपस्य गुणस्याग्निष्टोमस्तोत्र एवान्वयात् तद्भेदकत्वमेव स्यात् न कर्मभेदकत्वमिति वाच्यम्, तथात्वे फलोद्देशेन यागप्रयोगान्तरस्याप्यवश्यविधेयत्वापत्तेः लाघवेन कर्ममात्रभेदकत्वस्यैवाङ्गीकारात् । अत एव विवक्षितगत्या परम्परासम्बन्धेन रैवतीविशिष्टयागविधिरेवायम् । शाब्दबोधेऽन्वयनिर्वाहार्थं तु सम्भवन्मासिकस्याप्यग्निष्टोमस्तोत्रादेर्विशिष्टविधिसन्दष्टन्यायादिना विधेयत्वाङ्गीकरणम्, न वस्तुतः । अतश्च विवक्षितगत्या रैवतीरूपस्य गुणस्य यागान्वयितयैव विधेयत्वाद्युक्ता तत्स्वरूपभेदकता । अतः सिद्धं कर्मान्तरमेवात्र फलोद्देशेन विधीयत इति ।

नचैवमपि षष्ठ्यन्तैतच्छब्देन पूर्वकर्माङ्गतयाप्येतद्विधिप्रतीतिः कथं फलोद्देशेन कर्मान्तरविधानमिति वाच्यम्, तस्योद्देश्यानेकत्वकृतवाक्यभेदभिया निष्कासिततया प्राप्तपूर्वयागप्रकृतित्वरूपसम्बन्धानुवादकत्वात् वाक्येन च फलोद्देशेन विधानात् । प्रकरणात् पूर्वयागाङ्गत्व त्वनाशङ्क्यमेव । तस्मात् फलार्थं कर्मान्तरमेव विधीयते । तृतीयान्तैतच्छब्दस्तु "अनेन ज्योति" रितिवत् प्रस्तोष्यमाणकर्मवचन इति न विरोधः । प्रयोजनं स्पष्टम् । सूत्रन्तराधयनया परम्परान्वयात् समेष्वेषु वाक्येषु कर्मयुक्तमेव फलं स्यादिति ध्यात्यम् ।

इति रैवत्यधिकरणम् ॥ १२ ॥

भूतभावनाविशेषणविशेषणभूतासु रेवतीषु विशेषणविधिकल्पनायोगात् ता सागविवक्षेत्यप्यनाशङ्क्यम्, मुख्यविशेष्यभूतभावनाविशेषणत्वाभावेऽपि कृत्वा शब्दोक्तभावनाविशेषणत्वस्य सत्त्वेन पष्ठेनत्वाधिकरणपूर्वपक्षन्यायाविषयत्वात् । अपिच यत्र लिङ्गसङ्ख्यादौ कारकान्वयद्वारा भावनान्वयो व्युत्पत्तिसिद्ध तत्र तेषां तदनादरेण द्रव्यान्वये विशेषणविशेषणत्वात्त विधिकल्पनेति तद्विषयोऽसौ न्याय । ननु यत्रापि कारकातिरिक्त सम्बन्धेन समासादौ द्रव्यान्वयद्वारापि भावनान्वयव्युत्पत्ति, यथा— "लोहितोष्णीषा ऋत्विज" इत्यादौ, तत्र विशेषणविशेषणे विशेषणविधिकल्पनाया न किञ्चित् बाधकमस्ति । अत एव तादृशस्थले प्राप्तकर्मानुवादेनापि परस्परवैशिष्ट्यस्य पूर्वमेव प्रमितत्वादनेकविधानेपि न वाक्यभेद । चित्रयेत्यादौ च लिङ्गस्य प्रातिपदिकार्थे अन्वयोऽव्युत्पन्न इति वैशिष्ट्यस्य पूर्वमप्राप्तत्वात् प्राप्तकर्मानुवादेनानेकविधाने युक्तो वाक्यभेद । प्रकृते तु रेवतीना भावनान्वयस्यापि सत्त्वात् भावनायाश्चोत्तरकालतादि सम्बन्धेन मुख्यभावनाविशेषणत्वोपपत्ते युक्त विशिष्टविधानम् । तस्मात् कर्मान्तरविधिरेवायम् ।

नन्वेवमपि न कर्मान्तरत्वे प्रमाणमस्ति, "यदि ब्राह्मणो यजेत" त्यादावष्टेरिवाग्निष्टुत एव प्रयोगान्तरोपपत्ते, न ह्युभयत्रापि वाजिन न्यायेन कर्मान्तरत्वाशङ्का सम्भवति, वाजिनस्य ह्युत्पत्त्यन्वयित्वेन तद्विधिभेदापादकस्य युक्त कर्मान्तरत्वापादकत्वम्, कर्तृकालादिरूपस्य गुणस्य तु प्रयोगविध्यन्वयित्वेन उत्पत्त्यनन्वयान्नोत्पत्तिविधिभेदनिबन्धन कर्मभेदापादकत्वम्, अत एव कालोऽपि य प्रयोजनविशेषार्थमुत्पत्तौ वा वेति, यथाग्नेयादौ तत्रैव एव तेनाप्याग्नेयकर्मभेद, "यदि ब्राह्मणो यजेत" त्यादौ तु ब्राह्मणादे कर्तु प्रयोगान्वयित्वात् तद्भेदकत्वमेवाङ्गीकरिष्यत इति तन्नयेन प्रकृतेप्युत्तरकालतादिरूपस्य गुणस्य प्रयोगभेदकत्वस्यैव युक्तत्वान्न कर्मभेदकता युक्तेति चेन्न,— न ह्यप्राप्तस्य योपात्तस्य गुणस्यातिदेशत एव सम्भवत्प्राप्तिकतया स्वरूपेण विधे

पणविध्यविषयस्यात्र भेदकत्वाभावात् । सर्वत्र हि संख्यावत् गुणोऽपि विधेय एव भेदकः, न त्वविधेयः । यावज्जीवमित्यादावपि च निमित्तस्य स्वरूपेण विधेयस्यापि नैमित्तिकसम्बन्धित्वेनाप्राप्ततया विधेयत्वात् विनियोगभेदकत्वाविघातः । अतएव "यदि ब्राह्मणो यजेत" इत्यादौ ब्राह्मणादिकर्तृकत्वस्याप्राप्तत्वाद्युक्ता भेदकता । प्रकृते तु क्त्वाप्रत्ययोपात्तस्याग्निष्टोमस्तोत्रोत्तरकालतादेस्स्वरूपेण कर्मसम्बन्धित्वेन चातिदेशादेव प्राप्तत्वात् नैवास्ति भेदकत्वम्, अपि तु रेवतीरूपस्य गुणस्यैव । तस्य चोत्तरत्रान्वयित्वात् कर्मभेदकत्वमेव न प्रयोगभेदकत्वम् । नचैवं रेवतीरूपस्य गुणस्याग्निष्टोमस्तोत्र एवान्वयात् तद्भेदकत्वमेव स्यात् न कर्मभेदकत्वमिति वाच्यम्, तथात्वे फलोद्देशेन यागप्रयोगान्तरस्याप्यवश्यविधेयत्वापत्तेः लाघवेन कर्ममात्रभेदकत्वस्यैवाङ्गीकारात् । अत एव विवक्षितगत्या परम्परासम्बन्धेन रेवतीविशिष्टयागविधिरेवायम् । शाब्दबोधेऽन्वयनिर्वाहार्थं तु सम्भवत्प्राप्तिकस्याप्यग्निष्टोमस्तोत्रादेर्विशिष्टविधिसन्दंशन्यायादिना विधेयस्वाङ्गीकरणम्, न वस्तुतः । अतश्च विवक्षितगत्या रेवतीरूपस्य गुणस्य यागान्वयितयैव विधेयत्वाद्युक्ता तत्स्वरूपभेदकता । अतः सिद्धं कर्मान्तरमेवात्र फलोद्देशेन विधीयत इति ।

नचैवमपि षष्ठ्यन्तैतच्छब्देन पूर्वकर्माङ्गतयाप्येतद्विधिप्रतीतेः कथं फलोद्देशेन कर्मान्तरविधानमिति वाच्यम्, तस्योद्देश्यानेकत्वकृतवाक्यभेदाभियाऽनिकायितया प्राप्तपूर्वयागप्रकृतिस्वरूपसम्बन्धानुवादकत्वात् वाक्येन च फलोद्देशेन विधानात् । प्रकरणात् पूर्वयागाङ्गत्वं त्वनाशङ्क्यमेव । तस्मात् फलार्थं कर्मान्तरमेव विधीयते । तृतीयान्तैतच्छब्दस्तु "अग्नेर्ज्योतिः" रितिवत् प्रस्तोष्यमाणकर्मवचन इति न विरोधः । प्रयोजनं स्पष्टम् । गुणान्तराश्रयतया परस्परानन्वयात् समेष्वेषु वाक्येषु कर्मयुक्तमेव फलं स्यादिति व्याख्येयम् ।

इति रेवत्यधिकरणम् ॥ १२ ॥

## अथ सौभराधिकरणम् ।

### सौभरे पुरुषश्रुतेः निधने कामसंयोगः ॥२-२-२७॥

ज्योतिष्टोमे सौभरं साम त्रेधा समाम्नातं नित्यं नैमित्तिकं काम्यं च । तत्र षोडशिसंस्थावान्तरप्रकरणे "सौभरमुक्थ्यानां ब्रह्म साम भवति" त्यनेन नित्यतया विहितम् । अत्र हि ब्रह्मसामाख्यस्तोत्रोद्देशेन समाम्नायावगतं सौभरं विधीयते, प्रकरणाच्च षोडशिसंस्थापूर्वसाधनीभूतता स्तोत्रे लभ्यते, तस्य च स्तोत्रस्य वस्तुत उक्थ्याख्यस्तोत्रत्रयमध्यस्थत्वात् 'उक्थ्याना' मित्यनुवादः । नैमित्तिकतया तु अतिरात्रसंस्थावान्तरप्रकरणे "यदि बृहत्सामातिरात्रः स्यात् सौभरमुक्थ्यानां ब्रह्मसाम कार्यमि" त्यनेन विहितम् । अत्राप्यतिरात्रसंस्थायामतिदेशप्राप्ते बृहत्सामत्वे निमित्ते तदपूर्वसाधनीभूतब्रह्माख्यस्तोत्रोद्देशेनैव सौभरं विधीयते । तत्रैवातिदेशप्राप्ते रथन्तरसामकत्वे निमित्ते तु "यदि रथन्तरं सौभरमुक्थ्येषु कुर्यादि" त्यनेनातिरात्रसंस्थापूर्वसाधनीभूतोक्थ्यस्तोत्रोद्देशेन सौभरं विधीयते । पुनश्च नित्यविधिसन्निधौ "यो वृष्टिकामो यो ऽन्नाद्यकामो यस्स्वर्गकामः स सौभरेण स्तुवीते" त्यनेन फलत्रयार्थं सौभरं विधीयते । अत्र चोद्देश्यानेकत्वात् "सौभरेण स्तुवीते" त्यस्यानुषङ्गाङ्गीकारेण वाक्यत्रयं द्रष्टव्यम् । सौभरस्य च षड्जादिस्वरसमाहारात्मकस्य ध्वन्यात्मकशब्दत्वेन सिद्धरूपस्य दध्यादिवदाश्रयापेक्षायां षोडशिसंस्थाङ्गभूतब्रह्माख्यस्तोत्रमेव प्रकरणात्प्रणयनादिवदाश्रयत्वेन सम्बध्यते ।

यत्तु पार्थसारथिना भवदेवेन च सौभरस्य गीतिरूपक्रियावाचित्वादाश्रयापेक्षाभावेन 'स्तुवीते' त्यनुवादानुपपत्तिमाशङ्क्य, अनुवादान्यथानुपपत्त्यैव तृतीयान्तेन सौभरपदेन करणत्वविशिष्टस्यैव सौभरस्य करणतासम्बन्धेन फलोद्देशेन विधानादाश्रयाकाङ्क्षायाम् निराकाङ्क्षायां प्रकरणात् पूर्वस्तोत्रविशेषसम्बन्धोपपत्तिरित्युपपादनम् ; तत् गीतेरपि षड्जादिस्वरसमाहारात्मकत्वस्य पूर्वाधिकरणे साधितत्वादुपेक्षितम् ।

नच सौभरस्यापि क्रत्वर्थत्वेन प्राप्तत्वादुभयप्राप्तौ ऐन्द्रवायवाग्रानितिवद्धात्वर्थस्य स्तोत्रस्यैव फलोद्देशेन विधिरस्त्विति वाच्यम्, तथासति स्तोत्रस्यैव नहि क्रतुप्रयोगापत्तौ तत्र सौभरस्याप्राप्तत्वात्, तत्रापि विधाने विशिष्टविधेर्गौरवापत्ते', सौभरस्य फलसम्बन्धाङ्गीकारात् । अतस्सिद्धं सौभरस्य काम्यत्वमपि । तस्यच समानकाले शाखाभेदेन निधनाख्यान्तिमसामावयवाधारत्वेन 'हीष् ऊर्क् ऊ' इत्यादीनि स्तोभाक्षराणि समाम्नातानि, तदेवविधं सौभरं प्रकृत्य श्रूयते,"हीषिति वृष्टिकामाय निधन कुर्यात्, ऊर्गित्यन्नाद्यकामाय,ऊ इति स्वर्गकामाये" ति। तत्र किं हीषादिस्तोभाक्षराणि प्रकृतसौभराश्रितानि वृष्ट्याद्यर्थत्वेन विधीयन्ते, उत वृष्ट्याद्यर्थे सौभर एवानियमेन प्राप्तानि नियम्यन्त इति विचार । वाक्यभेदापादकगुणप्रमाणक भावनाभेदाविचारात् पादाध्यायसङ्गती स्पष्टे । इन्द्रियकामाधिकरणेवत्यधिकरणयोर्द्वयोरप्यपवादात्वनन्तरा ।

तत्र वृष्टिकामपदस्य तावत् स्वर्गकामाधिकरणन्यायेन फलपरत्वात् तादर्थ्येचतुर्थ्या तदर्थत्वेन हीषादिकं दध्यादिवत् गुणसंक्रान्तशक्तिकेन विधिना विधीयते । अत एव निधनपदमाश्रयतया प्राप्तनिधनसम्बन्धानुवाद: । तथाहि- हीषाद्यक्षराणि तावत्सिद्धरूपाणि सामभागपरिपूरकत्वेन योग्यत्वात् प्रकृतसौभराख्य सामैवाश्रयत्वेनावलम्बन्ते, युक्त हि तस्य स्वावयवद्वारा स्तोभाक्षराधारकत्वात् दृष्टविधया हीषादिसम्बन्धित्वम् । अतश्च यथैव स्तोत्रादे' स्वसाधनीभूतऋगक्षराभिव्यक्त्यर्थकसौभरादिसाध्यत्वात् परम्परासम्बन्धेप्याश्रयत्वाविघात', तथा साम्नोऽपि स्वावयवद्वारा स्तोभाक्षरसाध्यत्वादाश्रयत्वोपपत्ति: । न ह्यत्र वारवन्तीयादिवददृष्टं द्वारतया प्रविष्टम्, येनाश्रयत्वं विहन्येत । नचैवमपि भवन्मते साम्न: सिद्धरूपत्वेनाश्रयत्वानुपपत्ति', सिद्धरूपस्यापि उच्चारणक्रियाविशिष्टत्वेन कृतिसाध्यत्वात् रूपादिवदाश्रयत्वोपपत्ते: । ध्वन्यात्मकशब्दस्य नित्यत्वा

नङ्गीकाराच्च । नचैवमपि सौभरस्यानेकभागत्वान्निधनस्यैवाश्रयत्वे प्रमाणाभावः, निधनाधारतया हीषादिपाठस्यैव लाघवेनाश्रयतानियामकत्वात्, अन्यथा स्वरार्थनिधनाश्रितया हीषादिविधौ गौरवापत्ते । अस्तु वा तस्य तत्, तथापि भागान्तरे हीषादिनिवेशे स्तोभान्तरबाधापत्ते, क्वचिच्च प्रधानभूतऋगक्षरान्तरस्यैव बाधापत्तेरबाधपक्षपातिना शास्त्रेण क्रतुसद्गुण्यार्थं निधनाधारतयावश्यमपेक्ष्यस्य हीषादेस्तन्मात्राश्रयत्वलाभो नानुपपन्न । अतश्च निधनानुवादोपपत्तेरेतत्त्वाधिकरणन्यायेन हीषादिविशिष्टनिधनान्तरविध्याशक्यानुपपत्तेर्दध्यादिवद्गुणसक्रान्तशक्तिना विधिना इन्द्रियकामाधिकरणन्यायेन हीषादिकमेव तत्तत्फलोद्देशेन विधीयते । नच रेवत्यधिकरणन्यायापेक्षया लघुभूतेन्द्रियकामाधिकरणन्यायेन गुणफलसम्बन्धविध्युपपत्तावपि गुणफलसम्बन्धे अपूर्वविध्यापत्तेस्ततोप्यतिलघुभूतनियमविध्यापादकतत्तत्फलकसौभरसम्बन्धिनिधनाधारतया हीषादिविधिरिति पक्षान्तरमेव किमिति नाश्रीयत इति वाच्यम्, उक्तविधोद्देश्यसमर्पकाभावेन तादृशवचनव्यक्तिपक्षस्यानुक्तिसहत्वात् । तथाहि—निधनपदं वोद्देश्यसमर्पकम्, वृष्टिकामादिपदं वा नाद्य, निधनमात्रोद्देशेन विधानस्य तावत्पाठान्माप्तिसम्भवेनानुपपत्ते । वृष्टिकामपदेन वृष्टिसाधनसौभरीयत्वविशेषणे तु विशिष्टोद्देशेन वाक्यभेद । सौभरीयत्वस्य वृष्टिकामपदशक्त्याऽलाभात् लक्षणापत्तिश्च । अत एव न द्वितीय । नचैक पदं वृष्टिसाधनसौभरसम्बन्धिनिधनलक्षकम्, अन्यच्च तात्पर्यकग्राहकमिति शक्यते वक्तुम्, विनिगमनाविरहात् । तात्पर्यग्राहकस्यापि शाब्दबोधसामग्र्यन्तर्गतत्वेन वाक्यभेदानिवारणाच्च । अन्यथा हविरुभयत्वविवक्षाया दुर्निवारत्वात् । किञ्च वृष्ट्यादिसाधनसौभरवृत्तिनिधनोद्देशेनापि हीषादे पाठत एव प्राप्तत्वान्न विधिसम्भव । यदि तु वृष्टिसाधनीभूतसौभरनिधन इव तदसाधनसौभरनिधनेपि कदाचिद्धीषः प्राप्तिसम्भवान्तत्र तद्व्यावृत्तिफलकनियमस्यैव फलत्वोपपत्ते विधिसम्भव इत्युच्येत, ततो

नित्यनैमित्तिकसौभरप्रयोगे निधानाधारस्तोभाक्षराभावेन सापेक्षत्वापत्ति । अतो लघुभूतस्यापि नियमविधेरसम्भवात् वृष्टिकामपदस्य शक्त्युपस्थापित फलार्थत्वसम्भवे लाक्षणिकवृष्टिसाधनसौभरवृत्तिनिधनार्थत्वकल्पने प्रमाणा भावाच्च गुरुभूतेऽपि गुणफलसम्बन्धपक्ष एवाश्रीयते। एवं च कारणवैजात्येन कार्यवैजात्यस्यावश्यकत्वात् सौभरजन्यवृष्ट्यादिभ्यो हीषादिजन्यवृष्ट्यादीनि व्यक्तितो जातितश्च भिन्नानीत्यपि द्रष्टव्यम् ।

सूत्र तु सौभरसम्बन्धिनिधनाश्रिते हीषादौ कामान्तरसयोग एव वृष्टिकामपदेन प्रत्येतव्य , श्रुत्यादिवृष्टिकामशब्दन वृष्टिकामस्यैव पुरुषस्यो क्तत्वेन वृष्टिसाधनसौभरवृत्तिनिधनकामपरत्वे लक्षणापत्तेरिति व्याख्येयम् ।

## सर्वस्यैवोक्तकामत्वात् तस्मिन् कामश्रुतिस्स्यान्निधनार्था पुनर्श्रुतिः ॥२-२-२८॥

आश्रयलाभादेव तावन्नात्र गुणफलसम्बन्धो युक्त । नह्यत्र सौभर मनेकावयवात्मक सिद्धरूपञ्चैकाक्षराश्रयत्वेनान्वेतु योग्यम् । यद्यपि निधन द्वारा निधनमेव वा कथञ्चिद्योग्य स्यात् , तथापि तस्य विशेषत उप- स्थित्यभावान्नाश्रयत्वेन, द्वारत्वेन वा सम्बन्ध । वस्तुतस्तु शास्त्रस्याबाध पक्षपातित्वस्वाभाव्येन निधनस्यैव तदुपपत्ते पूर्वोक्तकुशकाशावलम्बनेना श्रयलाभोपपादनासम्भवान्नियमविधिलाघवानुरोधेनैव गुणविधिपक्षो निरा- कर्तव्य । तथाहि फलत्रयार्थमपि सौभर योगसिद्ध्यधिकरणन्यायेन सकृ दुच्चरितमेकस्मिन् प्रयोगे एकमेव फल साधयति नेतरत् । तत्र चैकार्थत्वा देकसौभरे अनियमन हीषादीनि त्रीण्यपि निधनानि प्राप्येरन् । ततश्च वृष्टि फलके सौभरप्रयोगे यथा हीषु प्राप्यते तथान्यान्यपि विकल्पेन प्राप्येरन् । यदा चान्यानि प्राप्यन्ते तदा हीषोऽप्राप्त युक्तो नियम. । नियमोऽप्यय वृष्ट्यर्थसौभरप्रयोगे हीषेवेत्येवविध विशेषस्यैव, ननु वृष्ट्यर्थसौभरप्रयोग

एव हीष् इत्येवंविध , शेषाणा विधेयशेषगतनियमफलसम्भवे उद्देश्यगतस्य तस्यान्याय्यत्वात् । नह्यत्र प्राप्तनियम , येन हीषोऽविधेयत्वमाशङ्क्येत, प्रत्यक्षस्यापि पाठस्य विधिकल्पनया सामान्यमुखेन च वृष्टिकामप्रयोग मुपारूढस्य मन्थरप्रवृत्तिकतया तत पूर्वप्रवृत्त्यङ्गीकारेणात्र हीष एव विधेयत्वात् । अतश्च तद्गतस्यैव नियमस्य फलत्वोपपत्ति । एवच शेषि नियमाकरणान्नित्यनैमित्तिकसौभरप्रयोगे हीषाद्यप्राप्ति । नचैवमपि प्रबलेन वाक्येन चतुर्थीश्रुत्या वा वृष्ट्यर्थसौभरप्रयोगविशेषाङ्गतया हीषादिविधौ लिङ्गादिवदेव दुर्बलस्य श्रुत्यकल्पकत्वात् कथ नित्यनैमित्तकप्रयोगे हीषादि प्राप्ति ? दुर्बलस्यापि पाठस्यात्यन्तवैयर्थ्यप्रसङ्गेन चमसाना भक्षे सामाख्या या इव पौर्णमासीस्थवेदिकरणादौ प्रकरणे पाठादेव च नित्यनैमित्तिकप्रयोग विषये हीषादिविधिकल्पकत्वस्याङ्गीकारात् । लिङ्गादेर्गार्हपत्यादौ लक्ष्ये शक्यसम्बन्धार्थमेवोपपत्ते ऐन्द्रादिविषये तस्य श्रुतिकल्पकत्वम् । नचैव पाठस्यापि वृष्ट्याद्यर्थसौभरप्रयोग एव निधनाख्यद्वारसम्बन्धेन कृतार्थत्वान्न नित्यनैमित्तिकप्रयोगेन श्रुतिकल्पकत्वापत्ति ? नहि विधिवाक्ये वृष्ट्यर्थसौभर सम्बन्धिनिधनस्यैवोद्देश्यता सम्भवति, येन पाठ विनैव निधनसम्बन्धो लभ्येत, वृष्टिकामपदेन तु वृष्टिसम्बन्धिमकृतसौभरमात्रलक्षणेऽपि निधन लक्षणायामेव प्रमाणाभावात् न तदन्तस्योद्देश्यत्वम् , अत पाठस्यैव निधनसम्बन्धप्रयोजकत्वात् नैमित्तिकप्रयोगे हीषाद्यप्राप्ति तदवस्थैवेति चेन,— वृष्टिसम्बन्धिसौभरमात्रस्यैवोद्देश्यत्वेऽपि हीषूविधेलेनुभूतनियमफल कत्वलाभाय निधनस्थानकत्वलाभोपपत्ते । एतद्विध्यभावे हि पाठेन निधन एवानियमेन हीषादि प्राप्यते, ततश्च विधिफलसामर्थ्यादेवात्र निधनस्थान कत्वलाभ । अत एव पाठेन सामान्यतो यत्किंचित्प्रयोगवृत्तिसौभरीयनि धनसम्बन्धितयैव कल्पितापि श्रुति विशेषविधिना बाधादाहवनीयादिविषयैव कल्प्यत इति युक्त तस्य नित्यनैमित्तिकप्रयोगमात्रविषयत्वम् । हीषादेश्च विधिफलसामर्थ्यात् निधनस्थानकत्वम् । नियमफलकत्वादेव च वृष्टिपदेन

वृष्ट्यवच्छिन्नप्रकृतसौभरलक्षणापि नातीव दोषमारहति । इष्यत एव हि विधिलाघवाद्यनुरोधेन " वार्तघ्नी पौर्णमास्याम् " इत्यादौ पौर्णमासीपदेन पौर्णमासीप्रधानसम्बन्ध्याज्यभागलक्षणा प्रयाजशेषाभिघारणादौ च द्विती यार्थलक्षणा । वृष्ट्यवच्छिन्नसौभरत्वस्यैव च लक्ष्यतावच्छेदकत्वात् न युगपद्वृत्तिद्वयविरोध । नापि विशिष्टोद्देशे वाक्यभेद । वस्तुतस्तु न लक्ष णापि, विधिफलसामर्थ्यानुसारेण प्रकरणावगतसौभराङ्गानुरोधेन च वृष्ट्य र्थत्वस्यैव परम्परासम्बन्धेनाश्रयणात् । अतश्च यथैव " वासिष्ठानान्नाराशसो द्वितीय प्रयाज " इत्यादौ नाराशसमन्त्रस्य वासिष्ठार्थत्व प्रमाणान्तरावगत द्वितीयप्रयाजाङ्गत्वनिर्वाहाय तत्रैव शाखान्तरप्राप्ततनूनपान्मन्त्रव्यावृत्तिफलक नियमलाभाय च वासिष्ठाभिलषितफलसाधनदर्शाद्यङ्गद्वितीयप्रयाजद्वारैव समाश्रयिष्यते तथात्रापि सत्यपि चतुर्थीयोगे युक्तितौल्यात् परम्परासम्बन्धा ङ्गीकरणे न दोष इति लक्षणाश्रयणेपि प्रमाणाभाव । अतो वृष्टौ हीषेव परम्परासम्बन्धेन कर्तव्य इति नियमफलकोऽय विधिरिति सिद्धम । अत एव परम्परासम्बन्धे प्रकृतसौभरप्रवेशात् कारीर्यादिजन्यवृष्टे हीषभावेपि न विघात । अतएव परम्परासम्बन्धघटकत्वेन विजातीयसौभरविशेष एव विवक्ष्यते नतु सौभरत्वावच्छिन्नानि सर्वाणि । शाखाभेदेन हि सौभराणि तत्तद्गीतिविशेषभिन्नान्येव समाम्नातानि । क्वचित् समानगीति कान्यपि । अतएव गीतिभेदभिन्नेषु न शाखान्तराधिकरणन्यायप्रवृत्ति रिति तत सौभराणा भेद एव । अतश्च विजातीये सौभरे हीष पक्षेप्यप्राप्तत्वा त्तस्य हीषादिनियमविषयत्वायोगेन न तस्य परम्परासम्बन्धघटकत्वम् । ततश्च वृष्टौ हीषेव विजातीयसौभरद्वारा कुर्यादित्येतद्वाक्यार्थ फलितो भवति, एवञ्च वृष्ट्यर्थसौभरविशेषावपि विजातीयाना सौभराणा विकल्पेन वृष्ट्यर्थप्राप्ताना हीष् निधनकस्यैव सौभरविशेषस्य वृष्टिसाधनता नान्येष मित्यपि नियम फलितो भवति । नचान्यथा वृष्टौ हीषेवेति नियम कथमपि सम्पादयितु शक्य

निधनान्तरयुक्तस्यापि सौभरान्तरस्य तदर्थं क्रियमाणत्वात्, अतो हीष् नियमविधे समानजातीयसौभरस्थले शाखान्तरीयोर्गादिनिधनान्तरव्यावृत्ति फलकत्वेऽपि हीष्निधनयुक्तविजातीयसौभरस्थले तस्य वृष्ट्यर्थता व्यावृत्तिफलकत्वमपि काम्यभोजिन्यायेन न विरुध्यते। अत एव यत्र न काम्यभोजिन्याय, यथा कारीर्यादौ, तत्र न तस्य वृष्ट्यर्थता व्यावर्त्यते, वृष्ट्यर्थसौभरविधेस्तु हीष्निधनकसौभरमात्रग्रहणेन चारितार्थ्यात् युक्ता विजातीय सौभरव्यावृत्तिफलकनियमफलकतेति विशेष। अत सौभरान्तरस्यापि नित्य नैमित्तिकप्रयोगविषयत्वमेव, न तु काम्यप्रयोगविषयत्वमित्यपि द्रष्टव्यम्। अत सिद्ध हीषादिविधौ विधिलाघवानुरोधनैव न गुणफलसम्बन्ध, नवा तदर्थं गुणान् भावनाभेद इति। प्रयोजन पूर्वपक्षे वृष्ट्यर्थं सर्वे सौभरानुष्ठानेपि अन्नाद्यार्थमूर्गादिनिधनानुष्ठान वृष्ट्यन्तरार्थं वा हीष एवानुष्ठानम्, सिद्धान्तेतु नेत्यादि स्पष्टम्। सूत्रन्तु सर्वस्य सौभरस्योक्तकाम त्वेन प्रत्यभिज्ञानात्तस्मिन् द्वारभूते सत्येव हीषाद कामश्रुति स्यात् नचैव सौभरे हीषादे पाटादेव प्राप्तत्वात् विधानानर्थक्य वृष्टिसाधनीभूत विजातीय सौभरवृत्तिनिधनव्यवस्थार्थत्वेन पुन श्रुतिसार्थक्यादित्येव व्याख्येयम्।

मीमासाम्बुनिधि प्रमथ्य सुदृढै र्यायोच्चयैर्निर्झरै
कृत्वा जैमिनिसूत्रमन्दरममु वेद तथा वासुकिम्।
यद्वालाहलसजमेव कलित मथा तर सज्जनै
श्रीकृष्णस्य तु भूषणाय स परस्य कौस्तुभाख्यो मणि॥

श्रीरुद्रदेवसूनो कृतिरेषा खण्डदेवस्य।
मीमासाकौस्तुभाख्या भेदाध्याये द्वितीयऽङ्घ्रि॥

इति श्रीमत्पूर्वोत्तरमीमासापारावारपारीणधुरीण श्रीरुद्रदेवसूनु खण्डदेवविरचित मीमासाकौस्तुभे द्वितीयाध्यायस्य

द्वितीय पाद ॥ २॥